# श्री दुर्गा सप्तशती

## चण्डी पाठ भाषा टीका

# श्री दुर्गा सप्तशती

अथवा

# नवदुर्गा पाठ

## भाषाटीकासहित


K. P. SABHA AMBPHALA
LIBRARY
No............
Date............
JAMMU

मूल्य : ३०.००

रणधीर बुक सेल्स (प्रकाशन) हरिद्वार

# दुर्गासप्तशती-विषयसूची

॥ ॐ नमश्चण्डिकायै ॥

# अथ सप्तशती-प्रयोगविधिः

ॐ श्रीगणाधिपतये नमः ॥ अथ प्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि ॥ प्रतिश्लोकमाद्यन्तयोः प्रणवं जपेन्मन्त्र सिद्धिः ॥१॥ अग्रे सर्वत्र श्लोकपदं मन्त्रोपलक्षणम् । सप्रणवमनुलोमव्याहृतित्रयमादौ अन्ते तु विलोमान्तादित्येवं प्रतिश्लोकं कृत्वा शतावृत्तिपाठेऽतिशीघ्रं सिद्धिः ॥२॥ प्रतिश्लोकमादौ जातवेदस इत्यृचं पठेत्सर्वकामसिद्धिः ॥३॥ अपमृत्युवारणाय त्र्यम्बकमन्त्रं पठेत् । आदावन्ते च शतमित्यर्थः । प्रतिश्लोकं तन्मन्त्रजप इत्यन्यत्र ॥४॥ प्रतिश्लोकं शूलेन पाहि नो देवीति पाठादपमृत्युनाशः । अस्य केवलस्यापि श्लोकस्य लक्षमयुतं सहस्रं शतं वा जपे अपमृत्युवारणम् ॥५॥ प्रतिश्लोकं शरणागतदीनार्तेति श्लोकं पठेत्सर्वकार्यसिद्धिः ॥६॥ प्रतिश्लोकं करोतु सा नः शुभेत्यर्द्धं पठेत्सर्वकार्यसिद्धिः ॥७॥ स्वाभीष्टवरप्राप्तये एवं देव्या वरं लब्ध्वेति श्लोकं पठेत् ॥८॥ सर्वापत्तिवारणाय प्रतिश्लोकं दुर्गे स्मृतेति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥९॥ सर्वा बाधेत्यस्य लक्षजपे

प्रतिश्लोकपाठे वा श्लोकोक्तं फलम् ।। १० ।। इत्थं यदा यदा बाधेति श्लोकं जपेन्महामारी-शान्तिः ।।११।। ततो वव्रे नृपो राज्यमिति मन्त्रत्रयजपे पुनः स्वराज्यलाभः ।।१२।। हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घण्टाबन्धने च बालग्रहशान्तिः ।।१३।। आद्यावृत्तिमनुलोमेन पठित्वा ततो विपरीतक्रमेण द्वितीयामनुलोमेन तृतीयामित्थमावृत्तित्रयेण शीघ्रं कार्यसिद्धिः ।।१४।।सर्वापत्तिवारणाय दुर्गे स्मृतेत्यर्द्धं ततोयदन्ति यच्च दूरकेत्यृचंतदन्तेदारिद्रचदुःखेत्यर्द्धमेव कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ।।१५।। कांसोस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मी-प्राप्तिः ।।१६।। प्रतिश्लोकमनृणा अस्मिन्नित्यृचं पठेदृणपरिहारः ।।१७।। मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं प्रतिश्लोकं पठेन्मारणोक्तावृत्तिभिः फलसिद्धिः ।।१८।। ज्ञानिनामपि चेतांसि इति श्लोकजपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् ।। प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् ।।१९।। रोगानशेषानिति श्लोकस्य पाठे सकलरोगनाशः, तन्मात्रजपेऽपि ।।२०।। इत्युक्त्वा सा तदा देवी गम्भीरेति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वा विद्याप्राप्तिर्वाग्वैकृतनाशश्च।।२१।। भगवत्या कृतं सर्वमित्यादिद्वादशोत्तरशताक्षरो मन्त्रः सर्वकामदः सर्वापत्तिवारणश्च ।।२२।।

देवी प्रपन्नार्तिहरे इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमसंख्यया जपे प्रतिश्लोकं पाठे वा सर्वापन्निवृत्तिः सर्वकामाप्तिश्च। एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव नमस्कारेणातिशीघ्रं सिद्धिः ॥ प्रतिश्लोकं कामबीजसम्पुटितस्य एकचत्वारिंशद्दिनं प्रत्यहं त्रिरावृत्तौ सर्वकार्यसिद्धिः॥२३॥एकविंशतिदिनपर्यन्तमुक्तरीत्या प्रत्यहं द्वादशावृत्तौ वशीकरणम् ॥२४॥ मायाबीजसम्पुटितस्य फट्पल्लवसहितस्य सप्तदिनपर्यन्तं त्रयोदशावृत्तावुच्चाटनसिद्धिः ॥ २५ ॥ तादृशमेव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः ॥ २६ ॥ एकोनपञ्चाशद्दिनपर्यन्तं प्रतिश्लोकं श्रीबीजसम्पुटितस्य पञ्चदशावृत्तौ लक्ष्मी प्राप्तिः ॥ २७ ॥ प्रतिश्लोकं वाग्बीजसम्पुटितस्य शतावृत्त्या विद्याप्राप्तिः ॥ २८ ॥

अथ शतचण्डीविधिः मन्त्रमहोदधौ—शतचण्डीविधानं तु प्रवक्ष्ये प्रीतये नृणाम्। नृपोपद्रव आपन्ने दुर्भिक्षे भूमिकम्पने॥१॥अतिवृष्टचामनावृष्टौ परचक्रभये क्षये। सर्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते॥२॥रोगाणां वैरिणां नाशो धनपुत्रसमृद्धयः। शङ्करस्य भवान्या वा प्रासादनिकटे शुभम् ॥३॥ मण्डपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणम्। तत्र कुण्डं प्रकुर्वीत प्रतीच्यां

मध्यतोऽपि वा ।।४।। स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश [1]वाडवान् । जितेन्द्रियान् सदाचारान् कुलीनान् सत्यवादिनः ।।५।। व्युत्पन्नांश्चण्डिकापाठरतांल्लज्जादयावतः । मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः ।।६।। जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम् । ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः ।।७।। भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् । मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः ।।८।। नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक्[2] । यजमानः पूजयेच्च कन्यानां नवकं शुभम् ।।९।। द्विवर्षाद्द्वादशाब्दान्ताः कुमारीः परिपूजयेत् । एकाब्दायाः प्रीत्यभावो रुद्राब्दा तु विवर्जिता ।। १० ।। तासां क्रमेण नामानि–कुमारी १ त्रिमूर्तिः २ कल्याणी ३ रोहिणी ४ कालिका ५ शाम्भवी ६ दुर्गा ७ चण्डिका ८ सुभद्रा ९ इति नाममन्त्रैस्तासां पूजा ।। तत्र हीनाधिकाङ्गीकुष्ठव्रणयुता अन्धा काणा कुरूपा कूबरी लोमयुग्देहा दासीजा रोगिणीत्येवमाद्या वर्ज्याः ।। विप्रजां पूजयेत् सिद्ध्यै यशसे क्षत्रियोद्भवाम् । वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ।। ११ ।। गन्धपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्ति वस्त्राभरणैश्च पूजयेत् । द्विवर्षा सा

---

१ वाडवान् ब्राह्मणान् । २ पृथक् सम्पुटीकरणादिति शेषः । प्रत्येकब्राह्मणेनायुतं जपः । कार्यः अष्टमी नवमी चतुर्दशीपौर्णमासीषु यथा शतावृत्तिसमाप्तिर्भवती तथारम्भः कर्त्तव्य इति साम्प्रदायिकाः ।

समायुक्ता त्रिमूर्तिर्हायनत्रिका। चतुरब्दा तु कल्याणी पञ्चवर्षा तु रोहिणी ॥ १२॥ षडब्दा कालिका प्रोक्ता चण्डिका सप्तहायना । अष्टवर्षा शाम्भवी स्याद्दुर्गा तु नवहायना ॥१३॥ सुभद्रा दशवर्षोक्ता नाममन्त्रैः प्रपूजयेत्। तासामावाहने मन्त्रः प्रोच्यते शङ्करोदितः ॥ १४ ॥ मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्। नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्॥ १५॥ कुमारिकादिकन्यानां पूजामन्त्रान् ब्रुवेऽधुना–जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणी ॥ पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तुते ॥ १६ ॥ त्रिपुरां त्रिपुराधारां त्रिवर्षां ज्ञानरूपिणीम् । त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ १७॥ कलात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ॥ कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ॥ १८ ॥ अणिमादिगणाधारामकाराद्य-क्षरात्मिकाम् । अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम्॥ १९ ॥ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां कालिकां पूजयाम्यहम् ॥२०॥ चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जनीम् । पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥ २१ ॥ सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ॥२२॥ दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् । पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम्॥२३॥सुंदरीं स्वर्ण-

वर्णाभां सुखसौभाग्यदायिनीम् । सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥२४॥ एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां समर्चयेत् (इति पूजनं कुमारिकाणाम्), वेद्यां विरचिते रम्ये सर्व्वतोभद्रमण्डले ॥२५॥ घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥२६॥ तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानिति । उपचारैस्तु विविधैर्नवार्णावरणान्यपि ॥ २७ ॥ ॐकारः प्रथमं पीठं पूर्णपीठमतः परम् । तृतीयं कामपीठञ्चपूजयेत्सम्प्रदायतः ॥२८॥पूर्वादिदिक्षु पीठस्य गणेशादिचतुष्टयम् । गणेशक्षेत्रपालौ च पादुके बटुकास्त्रयः ॥ २९ ॥ आग्नेय्यादिचतुर्दिक्षु पूज्यं देवीचतुष्टयम् । जया च विजया चैव जयन्ती चापराजिता ॥३०॥ पूर्वोक्तयन्त्रे पूर्वकोणे सरस्वतीसहितो ब्रह्मा श्रीसहितो विष्णुर्नैर्ऋत्यामुमया सहितः शिवो वायव्यां षट्कोणे चक्रमध्यबीजे श्रीमहालक्ष्मी ह्रीं महाकाली ऐं महासरस्वती क्लीं दक्षिणवामयोः उदक्सिंहो दक्षिणे महिषः षट्कोणेषु नन्दजारक्तदन्तिकाशाकम्भरीदुर्गाभीमाभ्रामर्यः सबिन्दुनामाद्यवर्णतारोद्याश्चासां नारसिंह्यथैन्द्री चामुण्डा उक्तरीत्या नाममन्त्रैः पूज्याः, ततो विष्णुमायादिचतुर्विंशतिदेवताः प्रागादिक्रमेण केसरेषु पूज्याः, त्रिपत्रञ्च केसरत्रयम् । ताश्च विष्णुमाया १ चेतना २ बुद्धि ३ निद्रा ४ क्षुधा ५ छाया ६ शक्ति ७ तृष्णा ८ क्षान्ति ९ जाति १० लज्जा ११ शान्ति १२ श्रद्धा १३

कान्ति १४ लक्ष्मी १५ धृति १६ वृत्ति १७ स्मृति १८ दया १९ तुष्टि २० पुष्टि २१ मातृ २२ भ्रान्ति २३ चिति २४ रूपा एतावत्यः सप्तशतीस्तवे पञ्चमेऽध्याये आसां चतुर्विंशतीनां न पाठ इति न भ्रमितव्यम्, कात्यायनीतन्त्रविरोधात्। नालमूलेऽनुसम्पूज्यमाधारादिचतुष्टयम्। आधारः कूर्मशेषौ च चतुर्थी पृथिवी नृप ॥ ३१ ॥ गृहकोणेषु गणेशक्षेत्रपालौ बटुको योगिन्यः प्रागादिदिक्षु इन्द्राद्याश्चेति एवं चतुर्दिनं कुर्यात्तत्र प्रथमेऽह्नि एकावृत्तिर्द्वितीय द्वे तृतीये तिस्रश्चतुर्थे चतस्र इति पञ्चमे होमः। होमद्रव्याणि—पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलादिभिः। मातुलिङ्गैरिक्षुखण्डैर्नारिकेलयुतैस्तिलैः ॥३२॥ जातीफलैतराम्रफलैरन्यैर्मधुरवस्तुभिः।इतिसप्तशतया दशावृत्या प्रतिमन्त्रं हुतञ्चरेत्॥३३॥अयुतञ्च नवार्णेन स्थापितेऽग्नौ विधानतः। कृत्वाऽऽवरणदेवानां होमं तन्नाममन्त्रतः ॥३४॥ कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च। अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः ॥३५॥ निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत्। भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः ॥ ३६ ॥ तेभ्योऽपि दक्षिणां दत्वा गृह्णीयादाशिषस्तथा ॥ एवं कृते जगद्वश्यं सर्वे नश्यन्त्युपद्रवाः ॥३७॥

॥ इति शतचण्डीविधिः ॥

श्रीगुरुःशरणम्

# अथ नवरात्रघटस्थापनादि प्रयोगः

तत्र यजमानः प्राप्तनवार्णदीक्षः सप्तशतीदीक्षितो वा गुरुदर्शितक्रियाकलापः क्वचित् पुण्यभूमौ स्थानं निर्माय ब्राह्मे मुहूर्ते समुत्थाय कृतावश्यकः कृतनित्यक्रियः कृतासनपरिग्रहः श्रीगुरुं ध्यायेत्। तत्र मन्त्राः——ॐ अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥१॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥२॥गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः। गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः॥३॥ ततः आचम्य प्राणानायम्य रक्षादीपं प्रज्वाल्य बद्धाञ्जलिः सम्प्रार्थ्य भूमिं प्रणम्य दशघटिकामध्ये अभिजिन्मुहूर्ते वा कलशस्थापनार्थं वेदिकां कृत्वा पञ्चपल्लवदूर्वाफलताम्बूल-कुंकुमपुष्पधूपादि—सम्भारान् सम्पाद्य सङ्कल्पं कुर्यात्। तत्र सङ्कल्पः——देशकालौ संकीर्त्य ममेहजन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकदीर्घायुर्विपुलधन पुत्रपौत्राद्यविच्छिन्नसन्तति-वृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयप्रमुखचतुर्विधपुरुषार्थसिद्ध्यर्थं अद्य विहितं कलशस्थापनं दुर्गापूजां सप्तशतीपाठं कुमारीपूजनं च करिष्ये। तत्र निर्विघ्नातासिद्ध्यर्थं गौरीगणपतिपूजनं

पुण्याहवाचनं सप्तशतीपाठार्थं ब्राह्मणवरणं स्वयं वा पाठं च करिष्ये ; ॐसुमुखश्चेत्यादि स्मरणपूर्वकं गणपतिपूजनं विधाय पुण्याहवाचनं कुर्यात् । ततो गन्धाक्षतपुष्पवस्त्रादिकं द्रव्यं चादाय देशकालौ संकीर्त्य अद्य शरत्कालीनदुर्गापूजनपूर्वकं मार्कण्डेयपुराणान्तर्गत-चण्डीसप्तशतीपाठकरणार्थममुकगोत्रममुकशर्माणं ब्राह्मणं त्वामहं वृणे ॐ वृतोऽस्मि, इति प्रतिवचनम् । ततो गन्धादिभिः सम्पूज्य भूमिं स्पृशेत् । तत्र मन्त्रः—ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं माहिꣳसीः ।। तत्र वेद्यां धान्यक्षेपणमन्त्रः—ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनुप्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा मसीनाम्पयोसि ।। तत्र कलशस्थापनमन्त्रः—ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वती पुनर्मा विशताद्रयिः ।। तत्र कलशे जलपूरणमन्त्रः—ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ।। तत्र गन्धप्रक्षेपणमन्त्रः-ॐगन्धद्वारां दुराधर्षां

नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । तत्र ओषधिप्रक्षेपणमन्त्रः–ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा । मनैनु बभ्रूणामहꣳ शतन्धामानि सप्त च ।। तत्र दूर्वाप्रक्षेपणमन्त्रः–ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।। एवानो दूर्वे प्रतनु सहस्रेण शतेन च ।। पञ्चपल्लवमन्त्रः––ॐ अश्वत्थेवो निषदनंपर्णेवो व्वसतिष्कृता। गोभाजऽइत्किलासथ यत्सनवथ पूरुषम्।।मृत्तिकामन्त्रः––ॐ स्योना पृथिवी नो भवानृक्षरानिवेशनी। यच्छानः शर्मसप्रथाः।।पूगीफलप्रक्षेपणमन्त्रः–ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳहसः ।। पञ्चरत्नमन्त्रः–ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे।। हिरण्यप्रक्षेपणमन्त्रः––ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।। तत्र कलशे वस्त्रवेष्टनमन्त्रः––ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं । देवस्त्वा सविता पुनातुव्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ।। तण्डुलपूर्णपात्रमन्त्रः––ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहाऽइषमूर्जꣳ शतक्रतो ।। तत्र वरुणावाहनमन्त्रः–ॐ तत्वा-

यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणेह बोध्युरुशर्ठं समानऽआयुः प्रमोषीः ।। कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । इत्यादिभिरभिमन्त्र्य, देवदानवसंवादे मथ्यमाने महोदधौ । इत्यादि मन्त्रैः प्रार्थयेत् । तत्र कलशोपरि अग्न्युत्तारण-पूर्वकं स्वर्णमयीं दुर्गाप्रतिमां पञ्चामृतादिना स्नापयित्वा संस्थापयेत् । तत्र आवाहनमन्त्रः— जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते ।। आगच्छ वरदे देवि दैत्यदर्पनिषूदनि । पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ।। इत्यावाह्य श्रीसूक्तेन आसनादिषोडशोपचारैः पूजयेत् । ततः प्रार्थना—मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ।। महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। यशो देहि धनं देहि सर्वान् कामांश्च देहि मे ।। इत्यादि प्रार्थ्य चण्डीपाठं कुर्यात् । तत्रसङ्कल्पः— देशकालौ संकीर्त्य मम यजमानस्य वा अतुलविभूतिकामः श्रीदुर्गाप्रीत्यर्थं कवचार्गलाकीलकसहितं मार्कण्डेयपुराणान्तर्गतंॐसावर्णिःसूर्यतनय इत्यादि सावर्णिर्भविता मनुरित्यन्तं देवीमाहात्म्य-पाठं करिष्ये, इति संकल्प्य आसनादि विधाय स्वव्यतिरिक्तहस्तलिखितं पुस्तकं स्पथायित्वा

पुस्तकं सम्पूज्य मन्त्रार्थं बुध्यमानः स्पष्टाक्षरं नातिशीघ्रं नातिमन्दं रसभावस्वरयुतं वाचयेत्। अध्यायमध्ये न विरमेत्, अन्यथा पुनः प्रथमतः पठनं कुर्यात्। ततः कुमारीपूजनम्। तत्र मन्त्राः–

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि। पूजां गृहाणकौमारी जगन्मातर्नमोऽस्तुते ॥ १ ॥

त्रिपुरां त्रिपुराधारां त्रिवर्णज्ञानरूपिणीम्। त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम् ॥ २ ॥

कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम्। कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम्॥३॥

अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्। अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम्॥४॥

कामाचारां शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां कालिकां पूजयाम्यहम्॥५॥

चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जनीम्। पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम्॥६॥

सदानन्दकरीं शान्तां। सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम्॥७॥

दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम्। पूजयामि सदा भक्त्या दुर्गां दुर्गार्ति नाशिनीम् ॥८॥

सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम्। सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ॥९॥

इति पुराणोक्तमन्त्रैः कन्याः सम्पूज्य पारणादिने कूष्माण्डबलिदानं कुर्यात् ॥ इति नवरात्रघटस्थापनादिप्रयोगः।

श्री गुरुः शरणम्

# अथ नवचण्डी-शतचण्डी-सहस्रचण्डी-अयुतचण्डी-लक्षचण्डीप्रयोगः

अथ मण्डपं चिकीर्षुः शतचण्ड्यां षोडशहस्तं सहस्रचण्ड्यां विंशतिहस्तं चतुर्द्वारतोरण-पताकादियुतं निर्वातं मण्डपं विधाय तन्मध्ये मण्डपतृतीयांशेन चतुर्हस्तां वा अष्टकोणयुतां वा चतुरस्रांपक्वेष्टकरचितां रम्यां हस्तोच्छ्रितांवेदिकां कृत्वा तत्पश्चिमे शतचण्ड्यां द्विहस्तं सहस्र-चण्ड्यां चतुर्हस्तंकुण्डं पद्माकृति चतुरस्रं वा मेखलायोनिकण्ठनाभिनालयुतं कुर्यात्। ग्रहमखपक्षे तदीशान्यां हस्तमात्रां द्व्यङ्गुलवप्रां ग्रहवेदीं चापि कुर्यात्। एवंकुण्डग्रन्थोक्तविधिना मण्डपादि रचयित्वा पलसुवर्णेन सहस्रचण्ड्यां पलपञ्चकेन मूर्त्यध्यायप्रतिपादितां महिषमर्दिनीप्रतिमां सावयवां कुर्यात्। एतत्सर्वमधिवासदिनात्पूर्वं विधेयम्।

अथ सुमुहूर्ते सपत्नीको यजमानः कृतनित्यक्रियः यथायोग्यालंकृतः जलपूर्णकलशहस्तः 'ॐ भद्रङ्कर्णेभि' रीति मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्य स्वासने प्राङ्मुख उपविश्य दक्षिणपार्श्वे सम्भारान् संस्थाप्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्माहं ममामुककामना-सिद्ध्यर्थं सनवग्रहमखां नवचण्डीं शतचण्डीं सहस्रचण्डीं लक्षचण्डीं वा ब्राह्मणद्वारा कारयिष्ये।

तदङ्गतया विहितं गणेशपूजनं पुण्याहवाचनंमातृकापूजनं नान्दीश्राद्धमाचार्यादिवरणं च करिष्ये।

## अथ आचार्यादिवरणसङ्कल्पः।

अमुककार्यसिद्धयर्थं करिष्यमाण—नवचण्डी वा शतचण्डी वा सहस्रचण्डीविधानयज्ञकर्मणि अमुकगोत्रोत्पन्नममुकशर्माणं ब्राह्मणमेभिर्गन्धाक्षतपुष्पफलस्वर्णाङ्गुलीयकासनमालाकमण्डलु-द्रव्यवासोभिराचार्यत्वेन त्वामहं वृणे, इति वृत्वा 'ॐवृतोऽस्मि' इति प्रतिवचनानन्तरमाचार्यहस्ते यज्ञकङ्कणं बद्ध्वा गन्धादिभिः सम्पूज्य 'ॐआचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत॥' इति प्रार्थयेत्। एवं ऋत्विजां वरणं कृत्वा गन्धादिभिः सम्पूज्य 'ॐऋत्विजश्च यथापूर्वं शक्रादीनां मखेऽभवन्। यूयं तथा मे भवितुमृत्विजोऽर्हथ सत्तमाः॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया। सुप्रसन्नैः प्रकर्त्तव्यं शान्तिकं विधि-पूर्वकम्॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः। अनुगृह्णन्तु मामद्य शतचण्डयाख्यकर्मणि॥ शतचण्डीजपे पूज्याः सन्तु मे नियमान्विताः। अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः॥ चण्डीध्यानरता नित्यं प्रसन्नमनसः सदा। माऽलीकभाषिणः सन्तु मा सन्तु परनिन्दकाः। ममापि

नियमा ह्येते भवन्तु भवतामपि ॥' इति प्रार्थ्य अर्घ्यं निवेदयेत्। शतचण्डीजपे ऋत्विजो नव ९ आचार्यो दशमः १० सहस्रचण्डीजपे शतमृत्विजः अष्टौ द्वारपालाश्च कार्याः । तत आचार्यो देशकालौ संकीर्त्य यजमानेन वृतोऽहमाचार्य कर्म करिष्ये, इति सङ्कल्प्य 'ॐयदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः।स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थंतत्र गच्छतु।।भूतप्रेतपिशाचाद्या ह्यपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यत् स्वीकरोमि भुवं त्विमाम् ॥' इत्युक्त्वा ईशानादिसर्वदिक्षु गौरसर्षपान् विकीर्य आचमनं कृत्वा पञ्चगव्येन कुशैः पवमानसूक्तेन आपोहिष्ठामयोभुव इति ऋचेन च मण्डपं सर्वत्र प्रोक्ष्य कृताञ्जलिः 'ॐस्वस्तिनोइन्द्र इति मन्त्र वारत्रयं पठेत्। मण्डपपक्षे मण्डपदेवतापूजां ध्वजपताकोच्छ्रयणं च कुर्यात्। ततो मध्यवेद्याः पश्चिमतः सुखासने प्राङ्मुख उपविश्य 'ॐपृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्' ।इति प्रार्थ्य 'ॐपृथ्वीकूर्मानन्तदेवताभ्यो नमः' इति सम्पूज्य वामपादाघातत्रयं कृत्वा यथोपदेशं विस्तरत संक्षेपेण वा भूशुद्ध्यादिकलामातृकान्यासान्तं कृत्वा एकादशन्यासान् कुर्यात्। ततो योनिमुद्रां प्रदर्श्य ध्यायेत्। श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला । रक्तमध्या

रक्तपादा नीलजंघोरुरुन्मदा ॥ सुचित्रजघना चित्रमाल्याम्बरविभूषणा। चित्रानुलेपना कान्तीरूपसौभाग्यशालिनी ॥ अष्टादशभुजा पूज्या सा सहस्रभुजा सती । आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात्॥ अक्षमाला च कमलं बाणोऽसिःकुलिशं गदा। चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः ॥ शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः॥ इति ध्यानं कृत्वा मानसोपचारैः सम्पूज्य पात्रासादनं कुर्यात् । ततो मध्यवेद्यां सर्वतोभद्रं तन्मध्यकोष्ठेषु अष्टदलं च विलिख्य तत्र ब्रह्मादिमण्डलदेवताः स्वस्वमन्त्रेण संस्थाप्य षोडशोपचारैः सम्पूज्य तन्मध्ये पीठपूजां कुर्यात् । तद्यथा---ॐ मण्डूकादिपरतत्वान्तपीठदेवताभ्यो नमः, इति पीठदेवताः सम्पूज्य पूर्वादिषु--- ॐ जयायै नमः १। ॐ विजयायै नमः २। ॐअजितायै नमः ३। ॐअपराजितायै नमः ४। ॐ नित्यायै नमः ५। ॐ विलासिन्यै नमः ६। ॐ दोग्ध्यै नमः ७। ॐघोरायै नमः ८। मध्ये--ॐ मङ्गलायै नमः ९। इति पीठशक्तिः पूजयेत्। ॐ ह्रीं सर्वशक्तिकमलासनाय सर्वात्मसंसर्गयोगपीठात्मने नमः, इति पुष्पाञ्जलिना आसनंदत्वा तत्र 'ॐमहीद्यौः' इत्यादिपूर्वोक्तैर्मन्त्रैर्बृहत्ताम्रकलशं संस्थाप्य तस्मिन् गन्धपुष्पफलसर्वौषधिदूर्वापञ्चपल्लवपञ्चरत्न-सुवर्णसप्तमृत्तिकानि

तत्तन्मन्त्रेण प्रक्षिप्य कौशेयवस्त्रद्वयेन संवेष्टय तदुपरि ताम्रपूर्णपात्रं निधाय कलशे वरुणमावाह्य सम्पूज्य कलशदेवताः स्मृत्वा 'कलशस्य मुखे विष्णुः' इत्यभिमन्त्र्य 'देवदानवसंवादे' इत्यादि प्रार्थयेत्। ततः कलशोपरिस्थपूर्णपात्रे रक्तवस्त्रे अष्टगन्धेन यन्त्रं लिखेत् । अथवा ताम्रपात्रे लिखितं यंत्रम् स्थापयेत्। तत्र श्रीसूक्तेन आवाहनादिपुष्पान्तैरुपचारैः सम्पूज्य आवरणपूजां प्रदक्षिणक्रमेण कुर्यात्। आवरणपूजा--त्रिकोणमध्ये देवीं सम्पूज्य त्रिकोणस्य पूर्वकोणे ॐ सरस्वतीसहिताय ब्रह्मणे नमः १ । नैर्ऋत्याम्--ॐ श्रीसहिताय विष्णवे नमः २। वायव्याम्--ॐ उमासहिताय शिवाय नमः ३। उत्तरे--ॐ सिंहाय नमः ४। दक्षिणे--ॐ महिषाय नमः ५। इति त्रिकोणदेवताः पूजयेत्। षट्कोणमण्डले पूर्वादिवामक्रमेण--पूजयेत् । ॐ नं नन्दजायै नमः १। ॐ रं रक्तदन्तिकायै नमः २। ॐ शां शाकम्भर्यै नमः ३। ॐ दुं दुर्गायै नमः ४। ॐ भीं भीमायै नमः ५। ॐ भ्रां भ्रामर्यै नमः ६। अष्टदले वामक्रमेण--ॐ ब्रां ब्राह्म्यै नमः १। ॐ मां माहेश्वर्यै नमः २। ॐ कौं कौमार्यै नमः ३। ॐ वैं वैष्णव्यै नमः ४। ॐ वां वाराह्यै नमः ५। ॐ नां नारसिंह्यै नमः ६। ॐ ऐं ऐन्द्र्यै नमः ७। ॐ चां चामुण्डायै नमः ८।

चतुर्विंशतिदलेष्वपि वामक्रमेण--ॐ विं विष्णुमायायै नमः १। ॐ चें चेतनायै नमः २। ॐ
बुं बुद्धयै नमः ३। ॐ निं निद्रायै नमः ४। ॐ क्षुं क्षुधायै नमः ५। ॐ छां छायायै नमः ६। ॐ
शं शक्त्यै नमः ७। ॐ तृं तृष्णायै नमः ८। ॐ क्षां क्षान्त्यै नमः ९। ॐ जां जात्यै नमः १०।
ॐ लं लज्जायै नमः ११। ॐ शां शान्त्यै नमः १२। ॐ श्रं श्रद्धायै नमः १३। ॐ कां कान्त्यै
नमः १४। ॐ लं लक्ष्म्यै नमः १५। ॐ धृं धृत्यै नमः १६। ॐ वृं वृत्यै नमः १७। ॐ श्रुं
श्रुत्यै नमः १८। ॐ स्मृं स्मृत्यै नमः १९। ॐ तुं तुष्टयै नमः २०। ॐ पुं पुष्टयै नमः २१।
ॐ दं दयायै नमः २२। ॐ मां मात्रे नमः २३। ॐ भ्रां भ्रान्त्यै नमः २४। बहिर्भूत-
गृहचतुष्कोणेषु। ईशान्याम्--ॐ गं गणपतये नमः १। आग्नेयाम्--ॐ क्षें क्षेत्रपालाय
नमः २। नैर्ऋत्याम्--ॐ बं बटुकाय नमः ३। वायव्याम्--ॐ यों योगिनीभ्यो नमः ४। पुनः
पूर्वादिषु प्रदक्षिणक्रमेण--ॐ लं इन्द्राय नमः १। ॐ रं अग्नये नमः २। ॐ यं यमाय
नमः ३। ॐ क्षं निर्ऋतये नमः ४। ॐ वं वरुणाय नमः ५। ॐ यं वायवे नमः ६। ॐ सों
सोमाय नमः ७। ॐ हं रुद्राय नमः ८। ॐ ब्रं ब्रह्मणे नमः। अधः--ॐ अं अनन्ताय नमः।

तद्बाह्ये—ॐ वज्राय नमः १। ॐ शक्तये नमः २। ॐ दण्डाय नमः ३। ॐ खड्गाय नमः ४। ॐ पाशाय नमः ५। ॐ अङ्कुशाय नमः ६। ॐ गदायै नमः ७। ॐ त्रिशूलाय नमः ८। ॐ पद्माय नमः ९। ॐ चक्राय नमः १०। अथाङ्गपूजा—ॐ दुर्गायै नमः पादौ पूजयामि। ॐ गिरिजायै नमः गुल्फौ पूजयामि। ॐ अपर्णायै नमः जानुनी पूजयामि। ॐ हरिप्रियायै नमः ऊरू पूजयामि। ॐ पार्वत्यै नमः कटिं पूजयामि। ॐ आर्यायै नमः नाभिं पूजयामि। ॐ जगन्मात्रे नमः उदरं पूजयामि। ॐ मङ्गलायै नमः कुक्षिं पूजयामि। ॐ शिवायै नमः हृदयं पूजयामि। ॐ माहेश्वर्यै नमः कण्ठं पूजयामि। ॐ विश्ववन्द्यायै नमः स्कन्धौ पूजयामि। ॐ काल्यै नमः बाहू पूजयामि। ॐ आद्यायै नमः हस्तौ पूजयामि। ॐ वरदायै नमः मुखं पूजयामि। ॐ सुवाण्यै नमः नासिकां पूजयामि। ॐ कमलाक्ष्यै नमः नेत्रे पूजयामि। ॐ अम्बिकायै नमः शिरः पूजयामि। ॐ देव्यै नमः सर्वाङ्गं पूजयामि। ततःतत्तन्मन्त्रैर्धूपदीपनैवेद्यादिकं समर्प्य महानीराजनं प्रदक्षिणामेकां नमस्कारांश्च कृत्वा यथासम्भवं छत्रचामरादिसमर्प्य फलैर्बलिं दत्वा अखण्डदीपं स्थापयेत्। अथ रक्तवस्त्रोपरि चतुःषष्टिकोष्ठगतेषु अक्षतपुञ्जेषु क्रमेणयोगिनीःपूजयेत्। ॐ जयायै नमः

जयामावाहयामि ॐ जये! इहागच्छ इह तिष्ठ इत्यावाहयेत् । एवं ॐ विजयायै नमः २ । ॐ जयन्त्यै नमः० ३ । ॐ अपराजितायै नमः० ४ । ॐ दिव्ययोगिन्यै नमः० ५ । ॐ महायोगिन्यै नमः० ६ । ॐ सिद्धयोगिन्यै नमः० ७ । ॐ गणेश्वर्यै नमः० ८ । ॐ प्रेतासनायै नमः० ९ । ॐ डाकिन्यै नमः० १० । ॐ काल्यै नमः० ११ । ॐ कालरात्र्यै नमः० १२ । ॐ निशाचर्यै नमः० १३ । ॐ टङ्कारिण्यै नमः० १४ । ॐ रुद्रवेतालिन्यै नमः १५ । ॐ हुङ्कारिण्यै नमः० १६ । ॐ ऊर्ध्वकेश्यै नमः० १७ । ॐ विरूपाक्ष्यै नमः० १८ । ॐ शुक्लाङ्ग्यै नमः० १९ । ॐ नरभोजिन्यै नमः० २० । ॐ फट्कारिण्यै नमः० २१ । ॐ वीरभद्रायै नमः० २२ । ॐ धूमाङ्ग्यै नमः० २३ । ॐ कलहप्रियायै नमः० २४ । ॐ राक्षस्यै नमः० २५ । ॐ विश्वरूपायै नमः० २७ । ॐ भयङ्कर्य्यै नमः० २८ । ॐ वीरकौमार्य्यै नमः० २९ । ॐ चण्डिकायै नमः० ३० । ॐ वाराह्यै नमः० ३१ । ॐ मुण्डधारिण्यै नमः० ३२ । ॐ भैरव्यै नमः० ३३ । ॐ ध्वांक्षिण्यै नमः० ३४ । ॐ धूम्राङ्ग्यै नमः० ३५ । ॐ प्रेतवाराह्यै नमः० ३६ । ॐ खड्गिन्यै नमः० ३७ । ॐ दीर्घलम्बौष्ठ्यै नमः० ३८ । ॐ मालिन्यै नमः० ३९ । ॐ मन्त्रयोगिन्यै नमः० ४० । ॐ

कालिन्यै नमः० ४१ । ॐ चक्रिण्यै नमः० ४२ । ॐ कंकाल्यै नमः० ४३ । ॐ भुवनेश्वर्यै नमः० ४४ । ॐ शकटयै नमः० ४५ । ॐ महामायायै नमः० ४६ । ॐ यमदूत्यै नमः० ४७ । ॐ करालिन्यै नमः०४८ । ॐ केशिन्यै नमः० ४९ । ॐ मर्दिन्यै नमः० ५० । ॐ रोमजंघायैनमः ५१ । ॐ निवारिण्यै नमः०५२ । ॐ विशालिन्यै नमः०५३ । ॐ कार्मुक्यै नमः० ५४ । ॐ लोल्यै नमः० ५५ । ॐ अधोमुख्यै नमः ५६ । ॐ मुण्डाग्रधारिण्यै नमः ५७ । ॐ व्याद्यै नमः० ५८ । ॐ कांक्षिण्यै नमः० ५९ । ॐ प्रेतरूपिण्यै नमः ६० । ॐ धूर्जटयै नमः ६१ । ॐ घोरायै नमः० ६२ । ॐ कराल्यै नमः० ६३ । ॐ विषलम्बिन्यै नमः० ६४ । ॐ चतुःषष्टियोगिनीभ्यो नमः, इति नाममन्त्रेण सम्पूज्य पायसबलिं दद्यात् । ततः तत्रैव एकदेशे—'ॐ बं बटुकाय नमः । क्षं क्षेत्रपालाय नमः' इति सम्पूज्य—'ॐ बं बटुकाय पिङ्गलभासुरनेत्राय बलिं गृहाण भक्ष भक्ष क्रन्दय क्रन्दय ह्रीं हूं स्वाहा ।' इति मन्त्रेण बटुकाय क्षेत्रपालाय पायसादिनानाद्रव्यबलिं दत्त्वा हस्तौ प्रक्षाल्याचामेत् । ततः अनेन पूजनेन श्रीमहाकाली-महालक्ष्मी-महासरस्वत्यः प्रीयन्तामिति देवीदक्षिणतो जलमुत्सृज्य कुमारीपूजां सुवासिनीपूजां च कुर्यात् । एवं देवीकु-

मार्यादिपूजा प्रत्यहं कार्या। द्वितीयदिने द्विगुणा, तृतीयदिने त्रिगुणा, चतुर्थदिने च चतुर्गुणा कार्या। अथ पाठक्रमः—देवीपुरतः सर्वे विप्राःनवार्णमन्त्रकृताङ्गन्यासाः मन्त्रार्थं बुध्यमानाः सप्तशतीस्तवं जपेयुः। प्रत्यहं ब्राह्मणभोजनम्। रात्रौ जागरणम्। पञ्चमेऽह्नि होमः नवरात्रे नवम्यामेव होमः। चतुर्दश्यष्टमीनवम्यन्यतमदिने समाप्तिः कार्या।

# अथ हवनप्रयोगः

आचम्य प्राणानायम्य आनो भद्रादीन् मङ्गलमन्त्रान् पठित्वा सङ्कल्पं कुर्यात्। तत्रसंकल्पः—देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्माहं सपत्नीकोऽहं मम सकुटुम्बस्य सपरिवारस्यायुरारोग्यविपुलपुत्रपौत्राद्यनवच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्धयर्थंश्रीमहाकालीमहालक्ष्मीमहासरस्वती-प्रीत्यर्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ब्राह्मणद्वारा कृतस्य नवचण्डी वा शतचण्डी वा सहस्रचण्डी वा अयुतचण्डी-सप्तशतीपाठस्य साङ्गतासिद्धयर्थं तद्दशांशतर्पणं तद्दशांशब्राह्मणभोजनं च करिष्ये। तदङ्गतया विहितं स्वस्तिपुण्याहवाचनं संक्षेपतः मातृकापूजनं वसोर्द्धारापूजनमायुष्यमन्त्रजपमाचार्यादिवरणं कुण्डसंस्कारपूर्वक-

मग्निप्रतिष्ठापनंच करिष्ये, तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोःपूजनंच करिष्ये। संक्षेपतः सर्वं ग्रहशान्त्यनुसारेण कृत्वा प्रधानहवने सप्तशतीप्रतिश्लोकेन स्वाहान्तहोमं चर्वाज्यद्रव्येण कुर्यात् । कुण्डे स्थण्डिले वा शतनामाग्निं प्रतिष्ठाप्य सुसमिध्य ध्यायेत् । ततः ईशान्यां ग्रहान् सम्पूज्य तदीशान्यां कलशं स्थापयेत् । ततः पूर्ववत् यन्त्रावरणदेवतापूजां देवीपूजां च कृत्वा कुशकण्डिकां कृत्वा आघारावाज्यभागौ हुत्वा सूर्यादिदिक्पालान्तदेवताभ्यो जुहुयात् । सर्वतोभद्रमण्डलदेवताहोमं कृत्वा प्रधानदेवताभ्यो महाकालीमहालक्ष्मीमहासरस्वतीभ्यो गुडूचीपायसदूर्वातिलपलाशपुष्पसर्षपपूगीफललाजायबिल्वफलरक्तचन्दनगुग्गुलद्राक्षारम्भाफलद्रव्यैस्त्रिमधक्तै रिक्षुखण्डैर्नारिकेलशकलैर्जातीफलैर्मातुलुंगैरन्यैर्मधुरवस्तुभिश्च तिलमिश्रघृताक्तपायसेन वा 'शूलेन पाहि नो देवि' इत्यादिचतुर्मन्त्रान् वर्जयित्वा सप्तशत्या प्रतिश्लोकं जुहुयुः । नवार्णमन्त्र जपदशांशेनापि जुहुयुः । अध्यायसमाप्तौ उवाचस्थले च पत्रपुष्पैर्होमः कार्यः । एवं प्रधानहोमं कृत्वा पूर्वोक्ताजयादिपीठशक्तिभ्यो यन्त्रावरणदेवताभ्यश्च योगिनीभ्यश्च एकैककयाहुत्या जुहुयात् । ततः स्विष्टकृदाहिहोमं कृत्वा इन्द्रादिक्षेत्रपालान्तदेवेभ्यो बलिं

हुत्वा पूर्णाहुतिं दत्त्वा प्रणीताविमोकादि कर्मशेषं समाप्य दशांशेन तर्पणं कृत्वा तद्दशांशेन मार्जनं कार्यम् । ततः आचार्यादीन् सम्पूज्य दक्षिणां दद्यात् । उत्तरपूजनं कृत्वा—देव्यै महाबलिं दत्त्वा प्रार्थनां कृत्वा जपं निवेद्य कुमारी ब्राह्मणसुवासिनीः सम्पूज्य भोजयित्वा दक्षिणादिभिः संतोष्य पीठादिकं आचार्याय दत्त्वा—'यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।। ' इति पठित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्युक्तो भुञ्जीत ।

नवचण्डीतो दशगुणः शतचण्ड्यां शतचण्डीतो दशगुणः सहस्रचण्ड्यां सहस्रचण्डीतो दशगुणोऽयुतचण्ड्यां अयुतचण्डीतो दशगुणो लक्षचण्ड्यां विधिः कार्यः ।। इति नवचण्डी-शतचण्डी-सहस्रचण्डी-अयुतचण्डी-लक्षचण्डीप्रयोगः समाप्तः ।।

# अथ दुर्गापूजाविधिः

स च जयन्तीति मन्त्रेण नवाक्षरेण कार्यः । तदुक्तं दुर्गाभक्तितरङ्गिण्यां देवीपुराणे—'कुर्याद्दिव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः ।' 'जयन्ती मङ्गलाकाली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते ।। अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत् ।।' इति ।

'ॐ दुर्गे दुर्गे रक्षिणि स्वाहा' इति नवाक्षरः। तत्र प्रतिपदि प्रातरभ्यङ्गं कृत्वा-देशकालौ संकीर्त्य ममेह जन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकदीर्घायुर्विपुलधनपुत्राद्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं शारदनवरात्रप्रतिपदि विहितकलशस्थापनदुर्गापूजाकुमारीपूजादि करिष्ये। इति सङ्कल्प्य 'महीद्यौः' इति भूमिं स्पृष्ट्वा 'ओषधयःसम्' इति यवान्निक्षिप्य, 'आजिघ्र कलशं'—इति कुम्भं संस्थाप्य 'इमं मे गङ्गे' इति जलेनापूर्य 'गन्धद्वाराम्' इतिगन्धम्। 'या ओषधीः' इति सर्वौषधीः। 'काण्डात्' इति दूर्वाः। 'अश्वत्थे वो' इति पञ्चपल्लवान्। 'स्योना पृथिवी' इति सप्तमृदः। 'याः फलिनीः' इति फलम्। 'स हि रत्नानि' इति पञ्चरत्नानि। 'हिरण्यं क्षिप्त्वा युवा सुवासाः' इति वस्त्रेणावेष्ट्य 'पूर्णादर्वि' इति पूर्णपात्रं निधाय। तत्र वरुणं सम्पूज्य जीर्णायां नूतनायां वा प्रतिमायां दुर्गामावाह्य पूजयेत्। तद्यथा-पूर्वोक्तं मन्त्रमुक्त्वा—'आगच्छ वरदे देवि दैत्यदर्पनिषूदनि ॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये ॥ सर्वतीर्थमयं वारि सर्वदेवसमन्वितम्। इमं घटं समागच्छ तिष्ठ देवगणैः सह ॥ दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय। बलिं पूजां गृहाण त्वमष्टभिः शक्तिभिः सह ॥' इत्यावाह्य पूर्वोक्तमन्त्रेण षोडशोपचारैः पूजयित्वा माषभक्तबलिं कूष्माण्डादिबलिं वा निवेदयेत् ॥

# अथ दुर्गापाठसंकल्पः[१]

विष्णुर्विष्णुर्विष्णुः ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्य्यावर्तान्तर्गत ब्रह्मावर्तैकदेशे अमुकदेशेवर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकराशिस्थिते सवितरि शेषेषु चन्द्र-भौम-बुध-गुरु-शुक्र-शनिषु अमुकामुक-राशिस्थितेषु सत्सु महामाङ्गल्यप्रदे मासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोत्पन्नः अमुकशर्माऽहं मम (अमुकगोत्रोत्पन्नस्य अमुकनाम्नो यजमानस्य वा) सपरिवारस्य श्रीमहाकाली महालक्ष्मीमहासरस्वतीदेवतानुग्रहतःकुण्डलीस्थदुष्टग्रहसूचितसूचयिष्यमाणसर्वविधोपद्रवप्रशमनार्थं तथा राजभयादिकृतसर्वविधपीडानिवृत्तिपूर्वकं सर्वाभीष्टसिद्ध्यर्थमायुरारोग्यैश्वर्यादिविवृद्ध्यर्थं

---

१. संकल्प करने के समय मनुष्यों को चाहिये कि यदि पाठ किसी यजमान के निमित्त करते हों तो यजमान का गोत्र और नाम तथा यदि सम्पुट पाठ करते हों तो जिस मन्त्र से सम्पुटित करते हों वह मन्त्र स्पष्ट रूप से उच्चारण करें। केवल कवच, अर्गला तथा कीलक के पाठ करनेवालों को 'कवचार्गलाकीलकपाठमहं करिष्ये' यही संकल्प करना चाहिये। यदि यजमान का पाठ करना हो तो 'करिष्ये' न कहकर 'करिष्यामि' संकल्प में कहें।

सर्वदा हर्षविजयकामनासिद्ध्यर्थं श्रीमहाकाली महालक्ष्मी महासरस्वतीदेवताप्रीत्यर्थं सर्वापन्निवारणार्थं ( कवचार्गलाकीलकादिसहितम् ) मार्कण्डेयपुराणोक्तं मार्कण्डेय उवाचेति पूर्वकं सावर्णिस्सूर्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तं रात्रिसूक्तादिदेवीसूक्तान्तमादावन्तेऽष्टोत्तरशतनवार्णमन्त्रसंपुटितं (अमुकमन्त्रेण सम्पुटितं वा) सप्तशतीस्तवपाठमन्ते रहस्यत्रयपठनञ्च करिष्ये, इति संकल्प्य——

ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥

इति मन्त्रेण पुस्तकपूजनम् ।

---

हर प्रकार की पुस्तक का प्राप्ति स्थान—

रणधीर बुक सेल्स (प्रकाशन) हरिद्वार

श्री विन्ध्यवासिन्यै नमः

# श्री दुर्गा सप्तशती के पाठ के लिए आवश्यक निर्देश

— दुर्गा सप्तशती के प्रत्येक पाठ के साथ अर्गला, कीलक तथा कवच का पाठ करना अत्यधिक आवश्यक है। यदि पाठ एक से अधिक बार किया जाना हो तब उपरोक्त नियम केवल एक बार ही आवश्यक होगा।

— जब भी दुर्गा सप्तशती का पाठ करें तो शुभारम्भ रात्रि सूक्त से करें और समापन देवी सूक्त से करें।

— जब भी दुर्गा सप्तशती के श्लोकादि अध्याय का समापन हो तब 'इति' शब्द का प्रयोग न करें और 'अध्याय' शब्द का भी उच्चारण न करें।

— दुर्गा सप्तशती का पाठ करते समय जब तक समापन न हो जाये तब तक विराम नहीं करना चाहिये।

— दुर्गा सप्तशती का पाठ करते समय ग्रन्थ कभी भी हाथ में नहीं लेना चाहिये।

— दुर्गा सप्तशती के शतचण्डी प्रयोग नौं या पाँच दिन में पूर्ण करने चाहिए।

— पाँच दिन में पूर्ण किये जाने वाले शतचण्डी के प्रयोग में प्रथम दिवस एक पाठ, द्वितीय दिवस दो पाठ, तृतीय दिवस तीन पाठ, चतुर्थ दिवस चार पाठ तथा पंचम दिवस में पाँच पाठादि करके हवनादि करना चाहिये। इस हवन में सामग्री सवा मन लगानी आवश्यक है।

— यदि नवार्ण मन्त्र का जप करके हवन करना हो तब केवल घृत से ही हवन होगा।

॥ श्रीगणेशाय नमः ॥

# अथ देव्याः कवचं प्रारभ्यते



अस्य श्रीचण्डीकवचस्य ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। चामुण्डा देवता। अङ्गन्यासोक्तमातरो बीजम्। दिग्बन्धदेवतास्तत्त्वम्। श्रीजगदम्बाप्रीत्यर्थे सप्तशतीपाठाङ्गजपे विनियोगः।

ॐ नमश्चण्डिकायै ॥ श्रीमार्कण्डेय उवाच ॥

**ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम्।**
**यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥**

कवच में श्रीमार्कण्डेयजी और ब्रह्माजी का संवाद है। चण्डिका देवी को नमस्कार करके श्री मार्कण्डेयजी बोले--हे पितामह! (ब्रह्माजी!) संसार में मनुष्यों की सब तरह से रक्षा करनेवाला, अत्यन्त गोप्य तथा जो किसी से कहा नहीं है, वह मुझसे कहिए ॥ १ ॥

ब्रह्माजी बोले---हे ब्राह्मण ! सब जीवों की भलाई करनेवाला तथा अत्यन्त गोप्य और परम पवित्र देवी का कवच ही है, उसे हे महामुने ! सुनो ॥२॥ (देवी की नौ मूर्तियाँ हैं जिन्हें

ब्रह्मोवाच ॥

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम्। देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥२॥ प्रथमं [1]शैलपुत्री च द्वितीयं [2]ब्रह्मचारिणी। तृतीयं[3]चन्द्रघण्टेति [4]कूष्माण्डेति चतुर्थकम् ॥३॥ पंचमं [5]स्कन्दमातेति

"नवदुर्गा" कहते हैं। उनके नाम बता रहे हैं) पहली शैलपुत्री, दूसरी ब्रह्मचारिणी, तीसरी चन्द्रघण्टा, चौथी कूष्माण्डा ॥ ३ ॥

---

१—गिरिराज हिमालय की पुत्री 'पार्वतीदेवी'। यद्यपि ये सबकी अधीश्वरी हैं तथापि हिमालय की तपस्या और प्रार्थना से प्रसन्न हो कृपापूर्वक उनकी पुत्री के रूप में प्रकट हुईं। यह बात पुराणों में प्रसिद्ध है। २—ब्रह्म चारयितुं शीलं यस्याः सा ब्रह्मचारिणी—सच्चिदानन्दमय ब्रह्मस्वरूप की प्राप्ति कराना जिनका स्वभाव है, वे 'ब्रह्मचारिणी' हैं। ३—चन्द्रः घण्टायां यस्याः सा चन्द्रघण्टा—आह्लादकारी चन्द्रमा जिनकी घण्टा में स्थित हो, उन देवी का नाम 'चन्द्रघण्टा' है। ४—कुत्सितः ऊष्मा कूष्मा=त्रिविधतापयुतः संसारः, स

पाँचवीं स्कन्दमाता, छठी कात्यायनी, सातवीं कालरात्रि, आठवीं महागौरी ॥४॥ तथा नवीं सिद्धिदात्री, इस प्रकार जो नव दुर्गा कही गयी हैं ये सभी नाम महान् आत्मा श्रीब्रह्माजी से ही कहे

**षष्ठं कात्यायनीति च। सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥४॥**
**नवमं सिद्धिदात्री च नव दुर्गाः प्रकीर्तिताः। उक्तान्येतानि नामानि**

---

अण्डे मांसपेश्यामुदररूपायां यस्याः सा कूष्माण्डा—अर्थात् त्रिविध तापयुक्त संसार जिनके उदर में स्थित है, वे भगवती 'कूष्माण्डा' कहलाती हैं। ५—छान्दोग्य श्रुति के अनुसार भगवती की शक्ति से उत्पन्न हुए सनत्कुमार का नाम स्कन्द है, उनकी माता होने से वे 'स्कन्दमाता' कहलाती हैं। ६—देवताओं का कार्य सिद्ध करने के लिये देवी महर्षि कात्यायन के आश्रम पर प्रकट हुईं और महर्षि ने उन्हें अपनी कन्या माना, अतः 'कात्यायनी' नाम से उनकी प्रसिद्धि हुई। ७—सब को मारनेवाले काल की भी रात्रि (विनाशिका) होने से उसका नाम 'कालरात्रि' है। ८—इन्होंने तपस्या द्वारा महान् गौरवर्ण प्राप्त किया था, अतः 'महागौरी' कहलाईं। ९—सिद्धि को देनेवाली होने से उनका नाम 'सिद्धिदात्री' है।

गये हैं।।५।। आग से जलते समय और शत्रुओं के बीच, युद्ध में, संकट के समय और अगम्य स्थान में भय से दुःखी होकर जो आदिशक्ति की शरण में गये हैं (और इन नामों का स्मरण किये हैं) ।।६।। उन लोगों का युद्ध में या किसी संकट में तनिक भी बुरा नहीं होता, और (हे माता !)

ब्रह्मणैव महात्मना ॥५॥ अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे। विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥६॥ न तेषां जायते किञ्चि-दशुभं रणसंकटे। नापदं तस्य पश्यामि शोकदुःखभयं नहि ॥७॥ यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिः प्रजायते। ये त्वां स्मरन्ति देवेशि रक्षसे तान्न संशयः ॥८॥ प्रेतसंस्था तु चामुण्डा वाराही महिषासना।

मैं उन लोगों को किसी प्रकार की विपत्ति या शोक या दुःख में नहीं देखता हूँ ।।७।। हे देवेशि ! भक्तिपूर्वक जिन्होंने तुम्हारा स्मरण किया है उन्हीं को सिद्धि मिलती है और जो तुम्हारा स्मरण करते हैं उनकी रक्षा तुम निश्चय ही करती हो ।।८।। चामुण्डा देवी प्रेत पर बैठती (सवारी

करती) हैं, वाराही भैंसे पर, ऐन्द्री (ऐरावत) हाथी पर, वैष्णवी गरुड़ पर ।।९।। और माहेश्वरी बैल पर; कौमारी मोर पर, श्रीविष्णु भगवान् की प्रियतमा लक्ष्मीदेवी हाथ में कमल लिए पद्म पर बैठती हैं।।१०।।और श्वेत (शुभ्र) रूप धारण करनेंवाली ईश्वरीदेवी बैलपर, सभी आभूषणों

ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ॥ ९ ॥ माहेश्वरी वृषारूढा कौमारी शिखिवाहना । लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ॥१०॥ श्वेतरूपधरा देवी ईश्वरी वृषवाहना । ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ॥११॥ इत्येता मातरः सर्वाः सर्वयोगसमन्विताः । नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१२॥ दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः । शङ्खं चक्रं गदां शक्तिं हलं च मुसला-

को पहिनी हुई ब्राह्मी देवी हंस पर बैठती (सवारी करती) हैं ।।११।। ये इस तरह की माताएँ (देवियाँ) सभी योगोंके सहित, अनेक आभूषणों की शोभा की खानि, अनेक रत्नोंसे सुशोभित

॥१२॥ और क्रोध से आकुल देवियाँ रथ पर बैठी हुई दिखाई दे रही हैं और शंख, चक्र, गदा, शक्ति, हल, मुसलरूपी हथियार ॥१३॥ और खेटक, तोमर, कुदारी, फाँस, भालारूपी अस्त्र, त्रिशूल और श्रेष्ठ शार्ङ्ग नामक धनुष आदि आयुधों को दैत्यों के शरीर के नाश के लिए और

युधम् ॥१३॥ खेटकं तोमरं चैव परशुंपाशमेव च। कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥ १४ ॥ दैत्यानां देहनाशाय भक्तानामभयाय च। धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ १५॥ नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे। महाबले महोत्साहे महाभयविनाशिनि ॥ १६ ॥ त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि। प्राच्यां रक्षतु

भक्तों को निर्भय बनाने और देवताओं के कल्याण के लिए धारण करती हैं ॥१४, १५॥ हे महान् भयंकर रूपवाली! उत्कट पराक्रमवाली! महाबलशालिनी! महान् उत्साहवाली! महान् से महान् भय-मृत्यु वा सांसारिक भयों को नष्ट करनेवाली! कष्ट (तपस्या) से देखे जाने-

वाली, शत्रुओं (काम क्रोधादि ६ या सांसारिकों) का भय बढ़ानेवाली ! अर्थात् इनको नष्ट करनेवाली, मेरी रक्षा करो। ऐन्द्री देवी पूर्व दिशामें मेरी रक्षा करें, अग्नि देवतावाली अग्निकोणमें रक्षा करें ॥१६,१७॥ वाराही देवी दक्षिण में, खड्गधारिणी नैर्ऋत्य में रक्षा करें, वारुणी पश्चिम में,

मामैन्द्री आग्नेय्यामग्निदेवता ॥१७॥ दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी । प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ॥ १८ ॥ उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी । ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा ॥ १९ ॥ एवं दश दिशो रक्षेच्चामुण्डा शववाहनी । जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥ २० ॥ अजिता

मृग-वाहिनी वायव्य में रक्षा करें॥१८॥कौमारी उत्तर में, शूलधारिणी ईशानमें रक्षा करें, ब्रह्माणी ऊपर से और वैष्णवीनीचेसे रक्षा करें ॥१९॥ इसी तरह मुर्दा की सवारीवाली चामुण्डा दशों दिशाओंमें रक्षा करें, जया देवी मेरे आगेसे रक्षा करें, विजयादेवी पीछे से रक्षा करें॥२०॥अजिता

बायीं तरफ, अपराजिता दाहिनी ओर रक्षा करें। उद्योतिनी शिखा की और उमा शिरकी रक्षा करें ॥२१॥ मालाधरी ललाट की, यशस्विनी दोनों भौंहों की रक्षा करें, त्रिनेत्रा दोनों भौंहों के बीच की और यमघण्टा नाक के दोनों छिद्रों की रक्षा करें ॥२२॥ शंखिनी आँखों के बीच

वामपार्श्वे तु दक्षिणे चापराजिता। शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ॥ २१ ॥ मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी। त्रिनेत्रा च भ्रुवोर्मध्येयमघण्टा च नासिके ॥२२॥ शंखिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी। कपोलौ कालिका रक्षेत्कर्णमूले तु शाङ्करी ॥२३॥ नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका। अधरे चामृतकला जिह्वायां च सरस्वती ॥ २४ ॥ दन्तान्रक्षतु कौमारी कण्ठदेशे

की, द्वारवासिनी कानों की रक्षा करें। कालिका दोनों गालों की और शाङ्करी कानों के मूल-प्रदेश की रक्षा करें॥२३॥ सुगन्धा नाकों की, चर्चिका ऊपर के ओष्ठ की रक्षा करें। अमृतकला नीचे के ओष्ठ की और सरस्वती जीभ की रक्षा करें॥२४॥कौमारी दाँतों की और चण्डिका कण्ठ-

भाग की रक्षा करें, चित्रघण्टा (गले की) घाँटी की और महामाया तालु-प्रदेश की रक्षा करें ॥२५॥ कामाक्षी दाढ़ी और सर्वमंगला मेरी वाणी की रक्षा करें। भद्रकाली गले की और धनुर्धरी पीठ की रक्षा करें ॥२६॥ नीलग्रीवा कण्ठ के बाहर और नलकूबरी नाड़ी की नलियों

तु चण्डिका। घण्टिकां चित्रघण्टा च महामाया च तालुके ॥२५॥ कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला। ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ॥२६॥ नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी। स्कन्धयोः खड्गिनी रक्षेद्बाहू मे वज्रधारिणी ॥२७॥ हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीषु च। नखाञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेत्कुलेश्वरी ॥२८॥ स्तनौ

की, खड्गिनी दोनों कन्धों की और वज्रधारिणी मेरे बाहुओं की रक्षा करें ॥२७॥ दण्डिनी दोनों हाथों की और अम्बिका अँगुलियों की रक्षा करें। शूलेश्वरी नाखूनों की और कुलेश्वरी कुक्षि (अर्थात् कोख) की रक्षा करें ॥२८॥ मानसिक सभी शोकों का नाश करनेवाली

महादेवी स्तनों की (अथवा महादेवी स्तनों की, और शोकविनाशिनी मन की) रक्षा करें, ललिता देवी हृदय की, शूलधारिणी पेट की रक्षा करें॥२९॥ कामिनी ढोढ़ी की और गुह्येश्वरी गुप्त-स्थान की रक्षा करें, पूतना कामिका मेढ़ (नाभि से नीचे का और लिङ्ग से ऊपर का स्थान

रक्षेन्महादेवी मनःशोकविनाशिनी। हृदये ललिता देवी उदरे शूल-धारिणी ॥२९॥ नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा। पूतना कामिका मेढ्ं गुदे महिषवाहिनी ॥३०॥ कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी। जङ्घे महाबला रक्षेत्सर्वकामप्रदायिनी ॥३१॥ गुल्फयोर्नारसिंही च पादपृष्ठे तु तैजसी। पादांगुलीषु श्रीरक्षेत्पादाधःस्थल-

है) की, महिषवाहिनी गुदा की रक्षा करें ॥३०॥ भगवती कमर की, और विंध्यवासिनी दोनों घुटनों की रक्षा करें। सभी कामों को देनेवाली महाबला दोनों जाँघों की रक्षा करें॥३१॥ नारसिंही एँड़ियों की और तैजसी पाँवों के पीठ की, श्री देवी पैरों की अँगुलियों

की और स्थलवासिनी पैरों के नीचे (तलुओं) की रक्षा करें ॥३२॥ दंष्ट्रा-कराली नखों की और ऊर्ध्वकेशिनी केशों की, कौमारी रोम के छिद्रों की और वागीश्वरी देवी त्वचा (चर्मभाग) की रक्षा करें ॥३३॥ श्रीपार्वतीदेवी रक्त, मज्जा, वसा, माँस, हड्डी और मेद की रक्षा करें, कालरात्रि अँत-

वासिनी ॥३२॥ नखान्दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी । रोमकूपेषु कौमारी त्वचं वागीश्वरी तथा ॥३३॥ रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती । अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ॥३४॥ पद्मावती पद्मकोशे कफे चूडामणिस्तथा । ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु ॥३५॥ शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रेश्वरी तथा । अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ॥३६॥ प्राणापानौ तथा व्यानमुदानं

ड़ियों की और मुकुटेश्वरी पित्त की रक्षा करें ॥३४॥ पद्मावती पद्मकोश (मूलाधार आदि चक्रों में रहता है) की और चूड़ामणि कफ की रक्षा करें, ज्वालामुखी नखों की किरणों और अभेद्या सभी सन्धियों की रक्षा करें ॥३५॥ ब्रह्माणी मेरे वीर्य की और छत्रेश्वरी छाया की

रक्षा करें और धर्मधारिणी हमारे अहङ्कार, मन और बुद्धि की रक्षा करें।।३६।।वज्रहस्ता प्राण, अपान, व्यान, उदान और समान नामक पाँचों वायुओं की और कल्याण शोभना मेरे प्राण की रक्षा करें।।३७।।योगिनी देवी रस, रूप, गन्ध, शब्द, स्पर्श—इन पाँच तत्त्वों की, और नारायणी

च समानकम्। वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ॥३७॥ रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी। सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ॥३८॥ आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी। यशःकीर्तिं च लक्ष्मीञ्च धनं विद्याञ्च चक्रिणी ॥३९॥ गोत्रमिन्द्राणि मे रक्षेत्पशून्मेरक्ष चण्डिके। पुत्रान्रक्षेन्महालक्ष्मीर्भार्यांरक्षतुभैरवी ॥४०॥ पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा। राजद्वारे महालक्ष्मीर्विजया

देवी सत्व, रज, तम इन तीनों गुणों की सदा रक्षा करें।।३८।।वाराही आयु की रक्षा करें, वैष्णवी धर्म की रक्षा करें और चक्रिणी यश, कीर्ति, लक्ष्मी, धन और विद्या की रक्षा करें ॥३९॥ इन्द्राणी हमारे कुल की रक्षा करें। हे चण्डिके! हमारे पशुओं की रक्षा करें। महालक्ष्मी

पुत्रों की, भैरवी देवी स्त्री की रक्षा करें।।४०।। सुपथा देवी रास्ते में और क्षेमकरी देवी दुर्गम मार्ग में रक्षा करें, श्रीमहालक्ष्मी राजद्वार (कचहरी आदि) में रक्षा करें ।।४१।। हे देवि ! जो स्थान रक्षा रहित और कवच से हीन हैं उन सबकी रक्षा करो; क्योंकि तुम विजयशालिनी एवं पापों का नाश करनेवाली हो ।।४२।। यदि मनुष्य अपना कल्याण चाहे तो

**सर्वतः स्थिता ॥ ४१ ॥ रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु । तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥४२॥ पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः । कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ॥४३॥ तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः । यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्। परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ॥४४॥**

बिना कवच के एक पग भी न चले, और कवच के सहित सदा जहाँ-जहाँ जाता है ।।४३।। वहाँ-वहाँ धन का लाभ तथा सभी इच्छाओं की सिद्धि करनेवाली विजय-प्राप्ति होती है और वह जिस-जिस वस्तु की इच्छा करता है, उस-उसको अवश्य प्राप्त करता है । कवच

पाठ करनेवाला मनुष्य इस पृथ्वी पर अनन्त उत्तम ऐश्वर्य को पाता है ॥४४॥ कवच पाठ करनेवाला मनुष्य संसार में निर्भय हो जाता है तथा संग्राम में पराजित नहीं होता और कवच से युक्त पुरुष तीनों लोकों में पूजा के योग्य होता है ॥४५॥ देवी का यह

निर्भयो जायते मर्त्यः सङ्ग्रामेष्वपराजितः। त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥४५॥ इदं तु देव्याः कवचं देवनामपि दुर्लभम्। यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ॥४६॥ दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः। जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥४७॥ नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः। स्थावरं जङ्गमञ्चैव कृत्रिम

कवच देवताओं को भी दुर्लभ है, जो मनुष्य एकाग्रचित होकर श्रद्धापूर्वक तीनों काल पढ़ता है ॥४६॥ उसको दैवी कला (शक्ति) हो जाती है, जिससे वह तीनों लोक में परास्त नहीं होता और अकाल आदि मृत्युओं से रहित हो, सौ वर्ष से अधिक जीता है ॥४७॥

उसके लूता (लूता पत्ता मकरी प्रसिद्ध है) विस्फोटक (शीतला) आदि सभी रोग नष्ट हो जाते हैं, स्थावर (कुचला वत्सनाभ आदि) विष, जङ्गम (सर्प आदि) विष और जो कृत्रिम (बनाया हुआ) विष ।।४८।। और पृथ्वी पर जितने अभिचार (दूसरे से

ञापि यद्विषम् ।।४८।। अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ।
भूचराः खेचराश्चैवजलजाश्चौपदेशिकाः ।।४९।। सहजाः कुलजा माला
डाकिनी शाकिनी तथा। अन्तरिक्षचरा घोराडाकिन्यश्च महाबलाः।।५०।।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसः। ब्रह्मराक्षसवेतालाः कूष्माण्डा

किए गए मारण-मोहन आदि सभी मंत्र यंत्र) और पृथ्वी तथा आकाश में चलनेवाले सब जलज (जल के सम्बन्ध से पैदा होनेवाले) और औपदेशिक (उपदेश से सिद्ध नीच देवता) ।।४९।। और संसर्ग से उत्पन्न रोग, कुल के रोग, गण्डमाला और डाकिनी, शाकिनी और आकाश में चलनेवाली महाबलशालिनी भयङ्कर डाकिनियाँ ।।५०।। सूर्यादि नवग्रह, भूत,

प्रेत, पिशाच, यक्ष, गन्धर्व, ब्रह्मराक्षस, बैताल, कूष्माण्ड, भैरव, ।।५१।। ये सभी, जिसके हृदय में कवच है उसे देखते ही नष्ट हो जाते हैं। इस कवच को याद रखनेवाले का राजा के द्वारा मान (सम्मान-प्रतिष्ठा) उन्नति (वृद्धि) होती है (अथवा राजा की मान-उन्नति

भैरवादयः।।५१।।नश्यन्ति दर्शनात्तस्य कवचे हृदिसंस्थिते। मानोन्नति-र्भवेद्राज्ञस्तेजोवृद्धिकरं परम्।।५२।। यशसा वर्द्धते सोऽपि कीर्तिमण्डित भूतले। जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा।।५३।। यावद्भूमण्डलं-धत्ते सशैलवनकाननम्।तावत्तिष्ठतिमेदिन्यांसन्ततिःपुत्रपौत्रिकी ।।५४।।

होती है) और यह कवच तेज को बढ़ानेवाला और महान् है ।।५२।। जो व्यक्ति पहले इस कवच का पाठ करके श्री दुर्गासप्तशती का पाठ करता है वह कीर्ति से विभूषित संसार में यश से अभ्युदय पाता है ।।५३।। जबतक पर्वत, वन आदि से युक्त यह भूमण्डल रहता है (अथवा शेषनाग जबतक इसे धारण किये रहते हैं) तबतक कवच पाठ करनेवाले व्यक्ति के

पुत्र, पौत्र आदि सन्ततियाँ स्थिर रहती हैं ।।५४।। मरने के बाद उस महामाया के प्रसाद से जो देवताओं को भी दुर्लभ स्थान है उस नित्य (अनश्वर) स्थान को पाता है ।।५५।।

**देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ।।५५।। लभते परमं रूपं शिवेन सह मोदते ।।५६।।**

इति वाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचं समाप्तम् ॥ १ ॥

उस परमज्योति को प्राप्त करता और कल्याणस्वरूप ब्रह्म के साथ (ब्रह्म में) आनन्द करता है ।।५६।।

इस प्रकार वाराह पुराण में हरिहरब्रह्म का बनाया हुआ देवीकवच समाप्त हुआ ॥ श्रीरस्तु ॥



१—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुतेः 'य एतां मायाशक्तिं वेद स मृत्युं जयति स पाप्मानं तरति सोऽमृतत्वं च गच्छति' इतिश्रुतेश्च ।

# अथ अर्गलास्तोत्रम्

ॐ अस्य श्रीअर्गलास्तोत्रमन्त्रस्य विष्णुऋषिः। अनुष्टुप् छन्दः। श्रीमहालक्ष्मीर्देवता
श्रीजगदम्बाप्रीतये सप्तशतीपाठाङ्गजपे विनियोगः।

ॐ नमश्चण्डिकायै

**जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा क्षमा शिवा**

**हे जयन्ती (सबको जीतनेवाली), मंगला (मोक्ष देनेवाली), काली (प्रलय करनेवाली), भद्रकाली (भक्तों का कल्याण करनेवाली), कपालिनी (प्रलय के समय मुण्ड धारण**

---

१—जयन्ती (सर्वोत्कृष्टा) सर्वकारणत्वात्। मंगला—मंगलं जननमरणादिरूपं सर्पणं भक्तानां नाति गृह्णाति नाशयति वा सा मंगला मोक्षप्रदा इत्यर्थः। काली—कलयति प्रलयकाले सर्वं सा काली। भद्रकाली—भद्रं कल्याणं भक्तेभ्यो दातुं कलयति स्वीकरोतीति भद्रकाली। कपालिनी—प्रलयकाले ब्रह्मादीन्निहत्य तेषां कपालं गृहीत्वा अटतीति कपालिनी। दुर्गा—दुःखेनाष्टांगादियोगेन कष्टेन गम्यते प्राप्यते इति दुर्गा। क्षमा—भक्तानामन्येषाञ्च सर्वानपराधान् क्षमते सहते जननीत्वात् या सा क्षमा॥ शिवा—चिद्रूपिणी। धात्री—सर्वप्रपञ्चधारणकर्त्री। स्वाहा--देवपोषिणी। स्वधा—पितृपोषिणी।

करनेवाली), दुर्गा (कठिनाई से मिलनेवाली), क्षमा (सबका सहनेवाली), शिवा, धात्री, स्वाहा और स्वधा-स्वरूपवाली देवि ! तुम्हें नमस्कार है ॥१॥ हे देवि ! चामुण्डे ! तेरी जय हो। हे जीवों के दुःखों को दूर करनेवाली ! तेरी जय हो। सर्वव्यापिके देवि ! तेरी

धात्री स्वाहा स्वधा नमोऽस्तु ते ॥१॥ जय त्वं देवि चामुण्डे जय भूतार्तिहारिणी। जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ॥२॥ मधुकैटभविद्राविविधातृवरदे नमः। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥३॥ महिषासुरनिर्णाशि भक्तानां सुखदे नमः। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥४॥ रक्तबीजवधे देवि चण्डमुण्डविनाशिनि।

जय हो। हे कालरात्रि, तुम्हें नमस्कार है ॥ २ ॥ हे मधु और कैटभ का नाश करनेवाली और ब्रह्मा को वर देनेवाली तुम्हें नमस्कार है। हे देवि ! मुझे रूप दो, विजय दो, यश दो, मेरे शत्रुओं का नाश करो ॥ ३ ॥ हे महिषासुर का नाश करनेवाली ! भक्तों को सुख देनेवाली ! तुम्हें नमस्कार है, मुझे रूप दो, जय दो, यश दो, मेरे शत्रुओं का नाश करो ॥४॥

